धन्यां सतीमुत्तमवंशजातां लब्ध्वाधिकां याति न कः प्रतिष्ठाम् ।
क्षीरोदकन्यां गिरिराजपुत्रीं गोपस्तथोग्रश्च यथाधिगम्य ॥ ८ ॥

इति तद्वचनमाकर्ण्य दूरितदुरितावलिं योजिताञ्जलिं तं भूपालपुङ्गवं नानाभिग्रहान् ग्राहयित्वा तस्याः प्रदानेनाऽनुजग्राह । ततः प्रमोदः सञ्जज्ञे । संवत् १२१६ वर्षे मार्गसुदि द्वितीयायां बलवति लग्ने संवेगमतङ्गजारूढो रत्नत्रयालङ्कृतशरीरः शुभमनःपरिणामवसनवान् दक्षिणपाणिबद्धदानकङ्कणः सम्यक्सितातपत्रनिवारिततापव्यापः श्रद्धासोदर्या क्रियमाणलवणावतरणो गुरुभक्ति-देशविरति-समिति-गुप्ति-प्रमुखसुमुखीजाणिणीगणदीयमानधवलमङ्गलः अमारिघोष एतत्पूर्णादितिर्वसे......(?) पटहेषु वाद्यमानेषु प्रोत्सारितेषु परिग्रहप्रमाणपटेषु दूरितेषु पापावकरेषु सद्बोधसुमनःश्रेणिवासितासु सन्न्यायराजवीथीषु पौषधागारद्वारमाससाद*। तदा अनुकम्पामहादेव्या कन्याजनन्या कृतप्रोक्षणः श्रीमदर्हतः साक्षिकं स नृपवरेन्द्रो अहिंसायाः पाणिं जग्राह । तदा तारामेलपर्वणि परमानन्दः । अथ षट्त्रिंशत्सहस्रपरिमाणत्रिषष्टिपुरुषचरित्राणि नवाङ्गवेदीमहोत्सवेन समानिन्ये । वेदिषडघास्थाने कपर्दपञ्चकन्यासव्यवहारे ते विंशतिर्वीतरागस्तवा नवाः । तत्र वंशे २ एकैकं शमीकाष्ठम् । तत्पदे श्रीयोगशास्त्रप्रकाशाः १२; तथा लक्षण-साहित्य-तर्केतिहास-प्रमुखशास्त्ररचना तत्परिकरः । मूलोत्तरगुणाभ्यां दृढीकृत्य वेदिकायां ज्ञानानलमुद्दीप्य, तत्र 'चत्तारी मंगल' इति मङ्गलान्यदात् । द्वासप्ततिलक्षप्रमाणरुदतीकरमोचनं कन्यामुखमण्डने राज्ञा दत्तम् । तत्कालमेव तस्याः पट्टबन्धं कारयित्वा तत्पितुर्योग्यानावासान् १४४४ विहारान्कारयामास । ततः सा हिंसा सपत्न्या अहिंसायाः परोन्नतिं तथाविधामालोक्य भर्तुः पराभवनिवेदनाय पितुर्धातुः समीपमुपागता । चिरदर्शनादभिभववैरूप्याच्चानुपलक्षिता तेनेत्यभिदधे—

का त्वं सुन्दरि ! ?, मारिरस्मि तनया ते तात धातः प्रिया,
किं दीनेव ?, पराभवेन, स कुतः ?, किं कथ्यतां कथ्यताम् ।
हेमाचार्यगिरा परार्द्ध्यगुणवान् हृद्वक्त्रहस्तोदरान्
मामुत्तार्य कुमारपालनृपतिः क्षोणीतलादाक्षिपत् ॥ ९ ॥

इति तद्भणितेरनन्तरं श्रीकुमारपालदेवस्य सत्यप्रतिज्ञस्यापि तस्य लिङ्गिनो गिरा त्वयि रक्तायां[1] विरक्तचित्ततां विमृश्य, अतःपरं भवत्याः स[2] कोऽपि प्रवरः वरः करिष्यते यस्तवैव एकातपत्रं कुरुते । धीरा भव' इति तां सम्बोध्य स्वसमीपे स्थापयांचक्रे । अथाहिंसादेव्या सार्द्धं श्रीकुमारपालनृपतिर्जीवन्नपि, असमानं[3]महानन्दसुखमनुभवन्,[4] चतुर्दशवर्षाणि यावत् सुखेनासामास[5] । तदनु कीर्तिं पूर्वप्रियामपि देशान्तरे प्रस्थाप्य यदा स्वर्लोकमलंचकार, तदैव तस्य प्रियस्य सप्रेमप्रसादललितान्यनुस्मरन्ती कलिमलिनं जनं परिजिहीर्षुरहिंसाऽनेनैव भूमिनाथेन[6] समं गमनं कृतवती[7] ।

॥ इति श्रीकुमारपालस्य अहिंसाया विवाहसम्बन्धप्रबन्धः ॥ शुभं भवतु ॥

[A सं० १५०९ वर्षे फागुणसुदि ९ वार रवौ पठता लपी ॥ छ ॥]

---

1 A नास्ति । 2 A भव्य एव स । 3 A 'असमान' नास्ति । 4 A अनुभूय । 5 नास्त्येतत्पदं A । 6 A भूपेन । 7 A चक्रे ।

# प्रबन्धचिन्तामणिग्रन्थान्तर्गतपद्यानुक्रमणिका

## —अकाराद्यनुक्रमेण—

## टिप्पण्यन्तर्गतपद्यानामनुक्रमणिका ।



## परिशिष्टान्तर्गतपद्यानामनुक्रमणिका ।